मेतद्दृष्टिफलमुक्तं तेनपृच्छासमयेयःकश्चिद्भावस्तन्वादिकःस्वामिनात्मीयनाथेनदृष्टोऽवलोकितस्तस्यभावस्य वृद्धिरुपचयोस्तिविद्यते अथवा तेनैवस्वामिनायुतः संयुक्तस्तस्यापिवृद्धिरस्ति सौम्यैर्वास्यात् सौम्यग्रहाणां बुधगुरुशुक्रपूर्णचंद्राणामन्यतमेनवायुतोदृष्टोवाभावः स्याद्भवेत् तस्यापिवृद्धिरस्तिवर्द्धनंवक्तव्यम् पापैरेवमिति एवमनेनप्रकारेणपापैःपापग्रहैरपि रविक्रूरयुतबुधभौमसौरिक्षीणचंद्राणामन्यतमेनयोयोभावोयुक्तोदृष्टोवातस्य भावस्यहानिरपचयोनिर्देष्टव्यावक्तव्या कस्मादिति तदेवाह पृच्छतांजन्मतोवेति पृच्छतांपृच्छासमयेनराणां जन्मतोवाजायमानानां तथाचोक्तंजातके पुष्णंति शुभाभावांस्तन्वादीन्घ्नंतिसंस्थिताः । पापाः सौम्याःपष्ठेरिष्फाःसर्वेनेष्टाव्ययाष्टमगाः इति जन्मन्याधानकालेप्रश्नकालेवेति ॥ ३ ॥

सौम्येविलग्नेयदिवास्यवर्गेशीर्षोदयेसिद्धिमुपैतिकार्यम् ॥ अतोविपर्यस्तमसिद्धिहे-

तुःकृच्छ्रेणसंसिद्धिकरंविमिश्रम् ॥ ४ ॥

टीका–अधुनाप्रश्नसमयेलाभादौशुभाशुभज्ञानमाह सौम्यइति सौम्यानांशुभानांग्रहाणांबुधगुरुशुक्रपूर्णचंद्राणामन्यतमेविलग्नेस्थितेयदिवास्यसौम्यग्रहस्यवर्गेतत्कालंविलग्नेभागेगृहहोराद्रेष्काणनवमभागद्वादशांशकत्रिंशःवर्गःप्रत्येतव्योग्रहस्ययोयस्यविनिर्दिष्टइतिवर्गलक्षणमुक्तम् अथशीर्षोदयेपृच्छा लग्नेमेषाद्याश्चत्वारःसधन्विमकराःक्षपाबलाज्ञेयाः पृष्ठोदयाविमिथुनाशिरसान्येशुभयतोमीनः इतिराशिपृष्ठोदयत्वंशीर्षोदयत्वंचोक्तम् एतेषामन्यतमेयदिविलग्नेपृच्छतोभवतितत्कार्यंसिद्धिंसाध्यनामुपैतिगच्छति अतोविपर्यस्तमिति अतोऽस्मात्पूर्वोक्ताद्विपर्यस्तंविपरीतमस्ति असिद्धिहेतुरसाध्यतायाःकारणम् एतदुक्तंभवति पापग्रहेणविलग्नस्थेनपापवर्गेवाविलग्नगतेपृष्ठोदयेचालग्नगतेप्रष्टुःकार्यंनसिद्ध्यति कृच्छ्रेणसंसिद्धिकरंविमिश्रं तत्पूर्वोक्तंविमिश्रितंसंकीर्णंयदिभवेत्तदाप्रष्टुःकृच्छ्रेणक्लेशेनसंसिद्धिकरंकार्यसाधकंभवति एतदुक्तंभवति पापसौम्यौ

द्वावपिलग्नस्थौभवतः पापसौम्यौवर्गस्थौवाउभयोदयो मीनोवाशीर्षोदयःपापयुक्तःपापवर्गस्थोवापृष्ठोदयःसौम्ययुक्तःसौम्यवर्गस्थोवा उभयोदयोवातदाक्लेशेनसिद्धिर्भवति तत्रचबलाधिक्यान्निश्चयइति ॥ ४ ॥

होरास्थितःपूर्णतनुःशशांकोजीवेनदृष्टोय
दिवासितेन ॥ क्षिप्रंप्रनष्टस्यकरोतिलब्धि
लाभोपयातोबलवाञ्छुभश्च ॥ ५ ॥

टीका—अधुनानष्टलाभज्ञानमाह होरास्थितइति शशांकश्चंद्रःपूर्णतनुःपरिपूर्णमंडलः दशमीमारभ्यकृष्णपञ्चमीयावत् पूर्णतनुर्भवति तथाचयवनेश्वरः मासेचशुक्लप्रतिपत्प्रवृत्तेःपूर्णःशशीमध्यबलोदशाहे।श्रेष्ठोद्वितीयेल्पबलस्तृतीयेसौम्यैस्तुदृष्टोबलवान्सदैव ॥एवंपूर्णतनुःशशांकःहोरायांलग्नेस्थितःहोरेतिलग्नंभवनस्यचार्द्धमिति लग्नस्यहोराव्यपदेशः तत्रस्थःशशीजीवेनगुरुणादृष्टोऽवलोकितोयदिवासितेनशुक्रेणदृष्टोभवति यदिवेत्ययंनिपातोविकल्पे क्षिप्रमाशुप्रनष्टस्यापहृतस्यद्रव्यादेर्लब्धिलाभंक-

रोति लाभोपयातइति अथवा शुभःसौम्यग्रहःबलवान् वीर्ययुतोलाभेएकादशस्थानेउपयातःप्राप्तोभवति तथापि चशब्दात्क्षिप्रमेवनष्टस्यलब्धिंकरोतीति ग्रहाणांस्थानदिक्चेष्टाकालबलंजातकेप्रोक्तम् बलवान्मित्रस्वगृहोच्चैरित्यारभ्यस्वदिनादिष्वशुभशुभाइत्येतदंतम् ॥ ५ ॥

स्वांशेविलग्नेयदिवात्रिकोणेस्वांशेस्थितःप श्यतिधातुचिंताम् ॥ परांशकस्थश्चकरोति जीवंमूलंपरांशोपगतःपरांशम् ॥ ६ ॥

टीका—अधुनाहृतनष्टमुष्टिगतचिंतितानां धातुमूलजीवानांपरिज्ञानमाह स्वांशेति यःकश्चिद्ग्रहस्तत्कालंस्वांशेआत्मीयनवांशकेस्थितःविलग्नेप्रश्नलग्नेतत्कालोदितंस्वांशंतस्यैवग्रहस्यात्मीयंनवांशकं तच्चपश्यत्यवलोकयतितदाप्रष्टुःधातुचिंतांवदेत् सुवर्णादिमृत्तिकांतंधातुद्रव्यम् एतदुक्तंभवति स्वांशकस्थोग्रहःस्वांशकयुक्तंलग्नंपश्यति तदाधातुचिंतांप्रवदेत्अथवालग्नगतंस्वांशंनपश्यतितदा।त्रि

स्वांशंपश्यतिनवमस्थानंपंचमस्थानंवास्वांशकसमेतंपश्य-
तीत्यर्थः यतोलग्नपंचमनवमानामेकएवांशस्तुल्यकालमु-
देति एतदुक्तंभवति स्वनवांशकस्थोग्रहोलग्नपंचमनवमा-
नामन्यतमंस्वांशकयुक्तंपश्यति तदाधातुचिंतांवदेत् तत्रा
पिधाम्याधाम्यप्रविभागोग्रहांशकवशाद्वाच्यः पापग्रहां-
शकमवस्थितस्यधाम्यम् सौम्यग्रहांशकसमवस्थितस्या-
धाम्यमिति परांशकस्थस्तुकरोतिजीवमिति यःकश्चि
द्ग्रहः परनवांशकस्थोऽन्यग्रहनवभागावस्थितोविलग्नगतं
स्वांशंपश्यति त्रिकोणयोरन्यतमगतंवा तदाजीवचिन्तां-
वदेत् पुरुपादिसरीसृपांतोजीवः तत्रादिग्रहयुक्तनवांशक-
वशात्द्विपदसरीसृपादिविभागः मिथुनकन्यातुलाधनुः-
पूर्वार्धकुंभादेवानराः पक्षिणश्चद्विपदाज्ञेयाः मेषवृषसिंहध-
न्विपरार्धाश्चतुष्पदाः कर्कवृश्चिकमकरमीनाः सरीसृपाः
तत्रमीनोह्यपदः अन्येतुबहुपदाः मूलंपरांशोपगतः परां-
शमिति यःकश्चिद्ग्रहः परांशोपगतोऽन्यग्रहनवांशकम-
वस्थितोविलग्नगतं परनवांशकं त्रिकोणयोरन्यतमगतं

वापश्यतितदामूलंकरोति मूलचिंतांप्रवदेत् एतद्यतःप्रायः संभवतितद्ग्रहदर्शनाज्ज्ञेयम् वृक्षादितृणांतंमूलं तत्रापिग्रह युक्तनवांशकवशात्स्थलजलत्वंज्ञेयं कर्कमकरमीनाःजलजाः अन्येतुसर्वेस्थलजाइति तथाचचिंतासिद्धिप्रश्नज्ञान मुक्तंस्वांशेस्थितोविलग्नेयदाग्रहःस्वांशकंनिरीक्षेत धातोस्तदानुचिंतांकरोति परसंस्थितोजीवंपरभागसन्निविष्टः परांशकंप्राग्विलग्नमायातम् पश्यतिमूलंप्रवदेदेवंनवपंचमेज्ञेयम् ॥ ६ ॥

धातुंमूलंजीवमित्योजराशौयुग्मेविंद्यादेत-
देवप्रतीपम् ॥ लग्नेयोंशस्तत्क्रमाद्गण्यएव
संक्षेपोऽयंविस्तरात्तत्प्रभेदः ॥ ७ ॥

इति श्रीवराहमिहिरात्मजपृथुयशोविरचितायां
षट्पंचाशिकायां होराध्यायः प्रथमः ॥ १ ॥

टीका—एतदेवपुनरपिप्रकारांतरेणाह धातुमिति मेषमिथुनसिंहतुलाधनुःकुंभाःओजराशयः वृषकर्ककन्यावृश्चिकमकरमीनायुग्मराशयः

प्रथमनवांशकोदयेधातुंप्रवदेत् द्वितीयेमूलं तृतीयेजीवं पुनरपिचतुर्थेधातुं पंचमेमूलं षष्ठेजीवं पुनःसप्तमेधातुम् अष्टमेमूलं नवमेजीवमिति युग्मेविंद्यादेतदेवप्रतीपम् युग्मेयुग्मराशौ लग्नगतेनवांशकक्रमेणैतदेवपूर्वोक्तंप्रतीपंविपर्ययेणविंद्यात्जानीयात् तेनप्रथमनवांशकोदयेजीवं द्वितीयेमूलं तृतीयेधातुं पुनश्चतुर्थेजीवं पंचमे मूलं षष्ठेधातुं पुनःसप्तमेजीवम् अष्टमेमूलं नवमेधातुमिति एवमनेनप्रकारेण क्रमात्परिपाट्यालग्नेविलग्नेयोंशोयोनवभागस्तत्कालमुदितः सयावद्रव्ययोगणनीयः अत्रचलग्ननवांशकवशात्प्राग्वद्योनिविभागः केचित्द्रेष्काणत्रितयेयथासंख्यंधातुंमूलंजीवमित्योजराशौयुग्मेविंद्यादेतदेवप्रतीपमितिवर्णयंति तच्चायुक्तम् यस्मात्पुरस्तादाचार्य एववक्ष्यति अंशकाज्ज्ञायतेद्रव्यमिति अयंसंक्षेपःसमासउक्तः विस्तराद्व्यासेनास्यैवार्थस्यप्रभेदःस्पष्टताअभिधीयतइति ॥ ७ ॥

इति श्रीभट्टोत्पलविरचितायांषट्पंचाशिकायां होराविवृतौसंक्षेपाद्धोराध्यायःप्रथमः ॥ १ ॥

वृषसिंहवृश्चिकघटैर्विद्धिस्थानंगमागमौन
रस्तः॥नमृतंनचापिनष्टंनरोगशांतिर्नचाभि-
भवः ॥ १ ॥ तद्विपरीतंतुचरैर्द्विशरीरैर्मि-
श्रितंफलंभवति ॥ लग्नेंद्रावेकव्यंशुभदृ-
ष्ट्याशोभनमतोऽन्यत् ॥ २ ॥

टीका—अथातोगमागमाध्यायोव्याख्यायते तत्रादावे-
वस्थानगमागमजीवितमरणरोगशांतिपराभिभवज्ञानमाह
वृषसिंहेति वृषसिंहवृश्चिकाःप्रसिद्धाः घटःकुंभःएतेस्थिर-
राशयः एतैर्वृषसिंहवृश्चिकघटैः एतेषामन्यतमेलग्नेप्राप्ते
स्थानंविद्धि जानीहि प्रष्टुःस्थानलाभोभवति गमागमौन-
रस्तः गमश्चागमश्चागमागमौतौनरस्तः नभवतः नमृतंमरणं-
नभवतिजीवत्येव नचापिनष्टं धात्वादिद्रव्यंधनम् अदर्शन-
पथिस्थितंननष्टंननाशंप्राप्तम् अथवाविदेशस्थोनररस्तस्मा-
त्स्थानान्ननष्टःअन्यदेशंनगतः नरोगशांतिःरोगोज्वरादिः
तस्यशांतिःशमनंव्याध्यभिभूतस्यनभवति नचाभिभवः
अभिभवःपराजयः सशत्रोःसकाशान्नभवति ॥

तद्विपरीतंतुचरैरिति चराःमेषकर्कटतुलामकराः तदि-
त्यनेनानंतरोक्तं विद्धिस्थानमित्यादिकंसर्वमत्यवमृश्यते
चरैःचराभिधानैःपृच्छालग्नस्थैस्तत्फलमनंतरोक्तंविपरीतं
विपर्ययाद्भवति पूर्वमुक्तंविद्धिस्थानमिति तत्रचरैःस्थान-
प्राप्तिर्नास्तीतिवाच्यागमागमोनस्तइतिपूर्वमुक्तं चरैर्गमा-
गमोविद्येते पूर्वमुक्तंनमृतः चरैर्मृतइतिवक्तव्यं पूर्वमुक्तं-
नचापिनष्टं चरैर्नष्टमितिवाच्यं पूर्वमुक्तंनरोगशांतिः च-
रैःरोगशांतिर्भवतीतिवाच्यं पूर्वमुक्तंनचाभिभवः चरैर-
भिभवोभवतीतिवक्तव्यम् द्विशरीरैर्मिश्रितंफलंभवति
इति द्विशरीराः द्विस्वभावाः मिथुनकन्याधन्विमीनाः
तैःपृच्छालग्नैर्मिश्रितंफलंभवति यत्स्थिरैरुक्तंयच्चरैरुक्तं
तन्मिश्रितमुभयंफलंभवति भवतिनभवतीतिवासर्वमेतय-
थोद्दिष्टम् तत्रायंनिश्चयः द्विस्वभावलग्नेप्रथमेर्द्धेस्थिर-
वत्फलंसर्वंवदेत् द्वितीयेर्द्धेचरवत् यतस्तस्यप्रथमार्द्धं
स्थिरसमीपवर्तिद्वितीयंचरसमीपवर्तीति तथाचास्मदीये
प्रश्नज्ञाने स्थिरराशौलग्नगतेस्थानप्राप्तिंवदेन्नचागमनम्

रोगोपशमोनाशोद्रव्याणांस्यात्पराभवोनात्र चरराशौ-
विपरीतंमिश्रंवाच्यंद्विमूर्त्युदये स्थिरवत्प्रथमेर्द्धेस्यादपरे
चरराशिवत्सर्वमितिलग्नेंदोर्वक्तव्यमिति लग्नंप्रश्नलग्नम्
इंदुश्चंद्रस्तयोर्लग्नेंद्वोर्द्वयोरपि शुभदृष्टयासौम्यग्रहदर्शनेन-
शोभनंफलंवक्तव्यम् देहमतोरूपत्वात् लग्नेंदूसौम्यदृष्टौ
संपत्करौभवतः अतोन्यदिति अतोस्मादुक्ताद्विपरीतेन्य-
दशुभंवक्तव्यं तेनलग्नेंदूपापदृष्टौयदिभवतस्तदासर्वपृच्छा
स्वशोभनंफलंवक्तव्यम् अर्थादेकैकस्मिन्नुभयदृष्टेमध्य-
मंफलंभवति ॥ २ ॥

सुतशत्रुगतैःपापैःशत्रुर्मार्गान्निवर्तते ॥
चतुर्थगैरपिप्राप्तःशत्रुर्भग्नोनिवर्तते ॥ ३ ॥

टीका—अधुनाशत्रोर्मार्गनिवृत्तिज्ञानमाह सुतशत्रुगतै-
रिति सुतश्चशत्रुश्चसुतशत्रू अनयोर्गतैःसुतस्थानंपंचमं रि-
पुस्थानंषष्ठम् अनयोर्द्वयोरपिस्थानयोःएकस्मिन्वापापैः
सूर्यभौमशनिभिःप्रश्नलग्नाद्गतैःसमवस्थितैःप्रष्टुः शत्रुःरि-
पुर्मार्गात्पथःनिवर्ततेगच्छति तैरेवपापै-

समवस्थितैः अपिशब्दःसम्भावनायां प्राप्तोपिशत्रुर्निकट स्थोभग्नःपराजितोनिवर्ततेप्रतीपंगच्छतीत्यर्थः ॥ ३ ॥

झपालिकुंभककर्कटारसातलेयदास्थिताः ॥
रिपोःपराजयस्तदाचतुष्पदैःपलायनम् ॥ ४ ॥
चरोदयेशुभःस्थितःशुभंकरोतियायिनाम् ॥
अशोभनैरशोभनंस्थिरोदयेपिवाशुभम् ॥५॥

टीका—अथान्ययोगांतरमाह झपेति झपोमीनःअ- लिर्वृश्चिकःकुंभकर्कटौप्रसिद्धौ एतेरसातलेलग्नाच्चतुर्थस्था- नेस्थिताएतेषामन्यतमः प्रश्नलग्नाच्चतुर्थस्थानेयदासमव- स्थितोभवतितदारिपोःशत्रोःपराजयोऽभिभवोभवति च- तुष्पदैःपलायनमिति मेषवृषसिंहधन्विपरार्धाश्चतुष्पदाः एतेषामन्यतमेलग्नाच्चतुर्थस्थेशत्रोःपलायनमपसर्पणंभवती त्यर्थः॥ ४ ॥ अथयायिनांप्रतिशुभाशुभमाह चरोदय इति चरोदयेचरराशुदमेतस्मिश्चशुभग्रहाणांबुधजीवशुक्राणां अन्यतमःस्थितश्चेत् यायिनांगच्छतांशुभंश्रेयःकरोति विदधाति तस्मिन्नेवचरोदयेअशोभनैःस्थितैःपापग्रहाणां

रविभौमार्कजानामन्यतमेस्थितेतेषामेवयायिनामशोभन-मश्रेयःकरोति स्थिरोदयेपिवाशुभम् स्थिराणामन्यत-मस्योदयेपापसंयुक्ते विकल्पेनशुभंभवति तत्स्थानंपापग्र हस्यस्वक्षेत्रम् उच्चंमूलत्रिकोणंमित्रक्षेत्रंवाभवति तदाशुभ मन्यथानशुभमित्यर्थः केचित्स्थिरेऽष्टमेऽपिवाशुभमिति पठंति स्थिरराशौलग्नाष्टपापसंयुक्तेवाशुभंप्राग्वदिति॥५॥

स्थिरेशशीचरोदयेनचागमोरिपोर्यदा ॥
तदागमंरिपोर्वदेद्विपर्ययेविपर्ययम् ॥ ६ ॥
स्थिरेतुलग्नमागतेद्विरात्मकेतुचन्द्रमाः ॥
निवर्ततेरिपुस्तदासुदूरमागतोऽपिसन्॥७॥
चरेशशीलग्नगतोद्विदेहःपथोर्धमागत्यनिव-र्ततेरिपुः॥ विपर्ययेचागमनंद्विधास्यात्परा जयःस्यादशुभेक्षितेतु ॥ ८ ॥

टीका–अथ शत्रोर्गमागमज्ञानमाह स्थिरेशशीति स्थिरेस्थिरराशौशशीचन्द्रोभवति चरोदयेचरराशौलग्न तेप्रश्नलग्नेप्रश्नकालेयदारिपोःशत्रोर्नचागमः ऽ।

विद्यतेतदातस्मिन्नेवप्रश्नेरिपोरागममागमनंवदेद्ब्रूयात् वि पर्यये विपर्ययमिति अस्मादेवपूर्वोक्ताद्विपर्ययेअन्यथात्वेवि पर्ययंविपरीतमेववक्तव्यं एतदुक्तंभवति चरेशशिनिस्थि रराशौ लग्नगतेयदिरिपोरागमनंश्रूयते तदातस्मिन्प्रश्नेना- गच्छतीतिवदेत् ॥ ६ ॥ अथशत्रुनिवृत्तिज्ञानमाह स्थिरे- त्विति स्थिरराशौलग्नमागते तत्काललग्नप्राप्तेद्विरात्मके- द्विस्वभावे राशौयदाचन्द्रमाःशशीभवति तदारिपुःशत्रुः सुदूरमागतोऽपिसन्स्वस्थानात्सुतरांदूरमागतोऽपिनिव- र्ततेप्रतीपंगच्छतीति अपिशब्दःसम्भावनायाम् ॥ ७ ॥ अ- थान्ययोगान्तरमाह चरेशशीति चरेचरराशौशशी चंद्रमाभवति तथालग्नगतःप्राग्लग्नस्थोद्विदेहोद्वि स्वभावो राशिर्यदातस्मिन्कालेपथोमार्गस्यार्धमागत्यनिवर्ततेप्रती- पंगच्छति तुशब्दोऽवधारणे विपर्ययइति विपरीतेशत्रोराग मनंद्विप्रकारेणस्याद्भवेत् एतदुक्तंभवति द्विस्वभावराशि स्थेशशिनि चरराशौलग्नगतेशत्रोरागमनंचलवन्नभवेत् पराजयःस्यादशुभेक्षितेत्विति तस्मिन्नेव विपरीतेयोगे

विपरीतेचंद्रलग्नेवाशुभेक्षितेपापग्रहसंदृष्टेशत्रोःसकाशात्प्र ष्टुःपराजयोऽभिभवः स्याद्भवेत् एतदुक्तंभवति द्विस्वभावराशिस्थितेशशिनि चरराशौलग्नगतेद्वयोरपिपापदृष्टयाशत्रोरागमनंद्विधाभवति समागमश्चपराजयंकरोतीत्यर्थः ॥ ८ ॥

अर्कार्किज्ञसितानामेकोपिचरोदयेयदाभवति ॥ प्रवदेत्तदाशुगमनंवक्रगतैर्नैतिवक्तव्यम् ॥ ९ ॥ स्थिरोदयेजीवशनैश्चरेक्षिते गमागमौनैववदेत्तुपृच्छतः ॥ त्रिपंचषष्ठा रिपुसंगमायपापाश्चतुर्थाविनिवर्तनाय ॥ १० ॥

टीका—अन्यदपिगमागमावाह अर्केति अर्कःआदित्यःआर्किःसौरिःज्ञःबुधःसितःशुक्रःएषांमध्येएकोऽपिग्रहोयदाचरोदयेचरराशौलग्नगतेस्थितोभवतितदाआशुक्षिप्रमेवयियासोर्गमनंवदेद्ब्रूयात् रविवर्ज्यमन्येषामेकतमोपियदाचराशौलग्नगतोभवतिसचवक्रगतैःप्रतीपगतिमाश्रितोभवति तदायियासोर्गमनंनेतिवक्तव्यम् यातः

च्छतीत्यर्थः ॥ ९ ॥ अथयोगांतरमाह स्थिरोदयइति स्थिरराशौ लग्नगतेयस्मिंश्चजीवशनैश्चरेक्षितेबृहस्पतिसौरिभ्यांदृष्टेपृच्छतःप्रष्टुः गमागमौनैववदेत् ब्रूयात् शत्रुगमागमौनैवभवतइत्यर्थः तस्मिन्नेवजीवशनैश्चरेक्षिते पापाः पापग्रहाः त्रिपंचषष्ठास्तृतीयपंचमषष्ठस्थानस्थाभवंति तदारिपोःशत्रोःसंगमायभवंति प्रष्टुःशत्रुणासहसंयोगोभवतीत्यर्थः अस्मिन्नेवपूर्वोक्तयोगे पापाअशुभग्रहाः चतुर्थाश्चतुर्थस्थानस्थास्तस्यैवशत्रोर्विनिवर्तनाय प्रतीपगमनायभवंति शत्रुर्विनिवर्ततइत्यर्थः ॥ १० ॥

नागच्छतिपरचक्रंयदार्कचंद्रौचतुर्थभवनस्थौ ॥ बुधगुरुशुक्राहिबुकेयदातदाशीघ्रमायाति ॥ ११ ॥ मेषधनुःसिंहवृषायद्युदयस्थाभवंतिहिबुकेवा ॥ शत्रुर्निवर्ततेतदा ग्रहसहितावावियुक्तावा ॥ १२ ॥

टीका—अथान्यद्गमनागमनाययोगांतरमाह नागच्छतीति अर्कःआदित्यः चंद्रःशशी तौलग्नाद्यदाचतुर्थभवन-

स्यौचतुर्थस्थानगतौभवतः तदापरचक्रंनागच्छतिनाया-
ति शत्रुसमूहोनायातीत्यर्थः बुधगुरुशुक्राःहिबुकेचतुर्थ
स्थानेयदास्थितास्त्रवंति तदापरचक्रंशीघ्रमाशुआयाती
त्यर्थः ॥ ११ ॥ अथयोगांतरमाह मेषधनुरिति एषांमे-
षधनुःसिंहवृषाणांमध्येयेकतमउदयस्थस्तत्काललग्नग-
तोभवति वाइत्यथवा तात्कालिकात्प्रश्नलग्नाद्धिबुके
चतुर्थस्थानेएषांमध्यादन्यतमोभवति तेच ग्रहैःसहिताः
समेताःरहितावातदातस्मिन्नेवकालेशत्रुर्निवर्ततेमतीपंग-
च्छतीत्यर्थः ॥ १२ ॥

स्थिरराशौयद्युदयेशनिर्गुरुर्वास्थितस्तदा-
शत्रुः ॥ उदयेरविर्गुरुर्वाचरराशौस्यात्त-
दागमनम् ॥ १३ ॥ ग्रहःसर्वोत्तमवलोल-
ग्नाद्यस्मिन्गृहेस्थितः ॥ मासैस्तत्तुल्यसं-
ख्याकैर्निवृत्तिर्यातुरादिशेत् ॥ १४ ॥
चरांशस्थेग्रहेतस्मिन्कालमेवंविनिर्दिशेत्।

टीका—अन्यच्छत्रोरनागमनप्रकारमाह स्थिरराशाविति उदयेतत्काललग्नेस्थिरराशौतत्रैवशनिःसौरिःगुरुःजीवोवाभवति तदाशत्रुःरिपुःस्वस्थानाचलितः तत्रैव तिष्ठति अथवाचरराशौलग्नगतेतत्रच रविर्गुरुर्वाभवति तदाशत्रोरागमनं आगमःस्याद्भवेत् ॥ १३ ॥ अथ यातुर्निवृत्तिज्ञानार्थंयोगंश्लोकद्वयेनाह ग्रहेति सर्वोत्तमबलोग्रहःलग्नाद्यस्मिन्गृहेयावत्तमेस्थानेस्थितः सर्वेषामुत्तमबलःप्रधानबलोपेतःतत्तुल्यसंख्याकैस्तत्तुल्यात्तत्समासंख्याप्रमाणयेषांमासानांतैः यातुःजिगमिषोःनिवृत्तिर्निवर्त्तनंप्रवासान्निर्दिशेद्वदेत् ॥ १४ ॥ चरांशस्थइति तस्मिन्सर्वोत्तमबलेग्रहेचरांशस्थेचरराशिनवभागस्थेपूर्वोक्तकालमेवंविनिर्दिशेत् तत्तुल्यसंख्याकैर्मासैःस्थिरभागांशकस्थेस्थिरनवांशस्थेतमेवकालंद्विगुणंद्द्यात्मकांशकेद्विस्वभावनवांशकेतमेवकालंत्रिगुणंवदेत् ॥ १५ ॥

यातुर्विलग्नाज्जामित्रभवनाधिपतिर्यदा ॥
करोतिवक्रमावृत्तेःकालंतंप्रवदेत्परे ॥ १६॥

उदयर्क्षाच्चंद्रर्क्षंभवतिचयावद्दिनानितावद्भिः ॥
आगमनंस्याच्छत्रोर्यदिमध्येनग्रहःकश्चित् १७
इति वराहमिहिरात्मजपृथुयशोविरचिता-
यांषट्पंचाशिकायांगमागमाध्या-
योद्वितीयः ॥ २ ॥

टीका—अत्रैवमतांतरमाह यातुरिति विलग्नंपृच्छालग्नं-तस्माज्जामित्रभवनंसप्तमस्थानंतस्याधिपतिः स्वामीसय-दायस्मिन्कालेवक्रंविपरीतंगमनंकरोतितंकालंयातुर्जिग-मिषोरावृत्तेरावर्तनस्यप्रवासान्निवृत्तिःभवति अपरेआ-चार्याःकृष्णादयोब्रुवतेकथयंति वक्रंचग्रहाणांयथासंभवं योज्यम् तथाचयातुःपृच्छालग्नात्सप्तमभवनाधिपोयदाव-क्रोभवति तदावक्तव्यः प्रवासनिवृत्तयेकालः ॥ १६ ॥
अथशत्रोरागमनेदिनप्रमाणमाह उदयेति उदयर्क्षमुदय-लग्नं चंद्रर्क्षंचंद्रराशिःपृच्छाकालेयत्रचंद्रमाःस्थितस्तस्मा दुदयर्क्षाचंद्रर्क्षंयावत्संख्यंभवति तावत्संख्यैर्दिनैःशत्रो-रागमनंस्यात् यदिमध्यइति त ् ं चंद्रयो ् ं

यदिकश्चिद्ग्रहोनभवतितदैवंग्रहसंभवेशत्रुरवश्यमेवनयातीत्यर्थः ॥ १७ ॥

इति श्रीभट्टोत्पलविरचितायांषट्पंचाशिकाविवृतौगमागमाध्यायोद्वितीयः ॥ २ ॥

दशमोदयसप्तमगाःसौम्यानगराधिपस्यविजयकराः ॥ आरार्किज्ञगुरुसिताःप्रभंगदाविजयदानवमे ॥ १ ॥ पौरास्तृतीयभवनाद्धर्माद्यायायिनःशुभैःशुभदाः ॥ व्ययदशमायेपापाःपुरस्यनेष्टाःशुभायातुः ॥ २ ॥

टीका—अथ जयपराजयाध्यायोव्याख्यायते तत्रादावेवजयपराजयज्ञानमाह दशमोदयेति उदये लग्ने दशमसप्तमेप्रसिद्धे एतेषुस्थानेषुलग्नात्सौम्याः शुभग्रहाः गताः समवस्थिताः पृच्छालग्नेनगराधिपस्यपुरस्वामिनोराज्ञो विजयकराः विशेषेण जयंकुर्वंति आरोभौमः आर्किः सौरिः एतौप्रश्नलग्नात् नवमेस्थानेस्थितौप्रष्टुः प्रभंगदौमकर्षेणभंगंपलायनंददतः तथाज्ञोबुधः

गुरुःजीवः सितःशुक्रः एतेलग्नान्नवमेस्थाने स्थिताः विजयदाःविशेषेणजयदाभवंति प्रष्टुःसंग्रामेविजयो भवतीत्यर्थः ॥ १ ॥ अथ नगरयायिनः कस्यविजयोभवतीत्येतत्परिज्ञानमाह पौरास्तृतीयेति पुरेभवाः पौराःनागराःपृच्छालग्नातृतीयभवनप्रभृतियद्राशिपङ्कमष्टमंस्थानंयावत् तावन्नागराज्ञेयाः एतद्राशिपङ्क्तिपौराणांशुभाशुभत्वेज्ञेयमित्यर्थः धर्माद्यायायिनः धर्मान्नवमस्थानात्प्रभृतिराशिपङ्क्तिद्वीतीयस्थानंयावत् तावत्स्थिताज्ञेयाः एतद्राशिपङ्क्तियायिनांशुभाशुभत्वेज्ञेयमित्यर्थः येनादौयात्रायामुद्योगःकृतःसयायीयेनपश्चात्कृतः सनागरःवाशब्दोऽत्रचार्थेज्ञेयः शुभैःशुभदाः एतेयथाविभागकल्पिताराशयोयस्यशुभैः सौम्यग्रहैः संयुक्ताभवंति तस्य शुभदाभवन्तीत्यर्थः अर्थाद्यस्यपापैः संयुक्तास्तस्य पराजयदाः तथाचप्रश्नेधर्मादेश्चक्रदलेयायिनोनागरास्तृतीयादौविजयः सौम्ययुतेस्यात्पुरभागेक्रूरसंयुतेभंगः तथाचास्मदीयेप्रश्नज्ञानेनवमाद्येचक्रदलेविज्ञेयोयायि .

तीयादौ पोराः शुभसंदक्षाभागे विजयः पुरेभंगइति अर्था-
देवभागद्वयेपि पापसौम्यैर्युक्तेव्यामिश्रंफलंभवति नजयो
नपराजयइति व्ययदशमायेपापाइति व्ययंद्वादशंदशमंप्र-
सिद्धम् आयमेकादशंसमाहारेएकवद्भावः तत्रपापाः पा-
पग्रहाः पृच्छालग्नात्समवस्थिताभवंतितदापुरस्यनगरस्य
नेष्टाः नशुभाभवंति यातुर्यत्पुरंतस्यनशुभाः यातुः पुनः
शुभकराः उपचयकराइत्यर्थः ॥ २ ॥

नृराशिसंस्थाह्युदयेशुभाःस्युर्व्ययायसंस्था
श्चयदाभवंति ॥ तदाशुसंधिंप्रवदेन्नृपाणां
पापैर्द्विदेहोपगतैर्विरोधम् ॥ ३ ॥

टीका—अथसंधिविरोधज्ञानार्थंयोगांतरमाह नृरा-
शीति नृराशयःपुरुषराशयः पुरुषाकृतयोराशयः नृरा-
शयःमिथुनकुंभतुलाकन्याः तथाआचार्यएवज्ञापकः तु-
लाथकन्यामिथुनोघटश्चनृराशयइति शुभाःसौम्यग्रहाःबु
धशुक्रबृहस्पतयः एतेउदयेपृच्छालग्नेस्थिताः स्युर्भवेयुः
[थवातएवसौम्यग्रहाः नृराशिसंस्थाव्ययायसंस्था-

भवंति व्ययंद्वादशम् आयमेकादशं चशब्दःसमुच्चये अनयोरपिसंस्थाःसमवस्थितायदाभवंति तदाआशुक्षिप्रमेवनृपाणांसंधिसंधानंप्रवदेद्ब्रूयात् पापैरिति पापारविभौमशनिक्षीणचंद्राः द्विदेहाःद्विस्वभावराशयः पापैरशुभग्रहैर्द्विदेहोपगतैर्द्विस्वभावराशिषुसमवस्थितैर्नृणामेवंविरोधं विग्रहंप्रवदेत् ॥ ३ ॥

केंद्रोपगताःसौम्याःसौम्यैर्दृष्टानृलग्नगाःप्रीतिम् ॥ कुर्वंतिपापदृष्टाःपापास्तेष्वेवविपरीतम् ॥४॥द्वितीयेवातृतीयेवागुरुशुक्रौयदातदा ॥ आश्वेवागच्छतेसेनाप्रवासीचन संशयः ॥ ५ ॥

इति वराहमिहिरात्मजपृथुयशोविरचितायांषट्पंचाशिकायांजयपराजयो नाम तृतीयोऽध्यायः ॥ ३ ॥

टीका–योगांतरमाह केंद्रोपगताइति केंद्राणिलग्नतुर्यसप्तमदशमानि तेषूपगताः समवस्थिताः

शुभग्रहैः अथवातएवसौम्याःनूलग्नगाःनूराशिपुप्रागुक्केपुस्थिताःसौम्यैःशुभग्रहैश्वदृष्टाःपरस्परमवलोकयंतीत्यर्थः एवंविधाप्रीतिंसंधिंकुर्वंतिनिवृत्तिंप्रापयंति तेपुकेंद्रेपुसमवस्थिताःपापाःतेचपापदृष्टाः परस्परंपापैरवलोकिताःविपरीतंविपर्ययमप्रीतिंविग्रहंकुर्वंति ॥ ४ ॥ अथ सेनागमनज्ञानमाह द्वितीयेति प्रश्नलग्नाद्यदाद्वितीयेवायथातथागुरुशुक्रौजीवसितौभवतः तदाचमूः सेनाआश्वेवागच्छतिक्षिप्रमेवायाति प्रवासीअन्यदेशस्थः आश्वेवागच्छतिनसंशयः निर्विकल्पंयथास्यात्तथा ग्रहाणांक्रमविवक्षार्थम् कदाचिद्द्वावेवद्वितीयेवाद्वावेवतृतीयेवाएकोद्वितीयेवातृतीयेऽप्येकएवेति ॥ ५ ॥

इतिश्रीभट्टोत्पलविरचितायांपट्पंचाशिकाविवृतौजयपराजयाऽध्यायस्तृतीयः ॥ ३ ॥

केंद्रत्रिकोणेपुशुभास्थितेपुपापेपुकेंद्राष्टमवर्जितेपु ॥ सर्वार्थसिद्धिंप्रवदेन्नराणांविपर्ययस्थेपुविपर्ययःस्यात् ॥ १ ॥ त्रिपंचलाभा

स्तमयेषुसौम्यालाभप्रदानेष्टफलाश्चपापाः ॥ तुलाथकन्यामिथुनंघटश्चनृराशयस्तेषुशुभंवदंति ॥ २ ॥

टीका—अधुनाशुभाशुभलक्षणाध्यायोऽन्याख्यायते तत्रादावेवप्रष्टुः शुभाशुभज्ञानमाह केंद्रेति केंद्राणि लग्न १ चतुर्थ ४ सप्तम ७ दशमानि १० त्रिकोणसंज्ञेनवपंचमे शुभाः सौम्यग्रहाः केंद्रेषुत्रिकोणेषुशुभस्थितेषुशुभाः स्थितायेषुसौम्यग्रहयुक्तेष्वित्यर्थः शुभान्वितेष्वितिपाठः तथापापेषुपापग्रहेषुकेंद्राष्टमस्थानंवर्जयित्वा अन्यत्रसमवस्थितेषुसत्सुनराणांमनुष्याणांसर्वार्थसिद्धिंवदेत् सर्वेषांनिःशेषाणामर्थानांसिद्धिं साधनंवदेद्ब्रूयात् विपर्ययइति एषुपापसौम्येषुविपर्ययेविपरीते अन्यथास्थितेषु विपर्ययोवैपरीत्यमेवस्याद्भवेत् एतदुक्तंभवति यदापापाःकेंद्रत्रिकोणाष्टमेषुभवंति सौम्याःकेंद्रत्रिकोणाष्टमवर्ज्यमन्यत्रभवंति तदासर्वार्थानामसिद्धिंप्रवदेत् ॥ १ ॥ अधुनालाभालाभज्ञानमाह त्रिपंचेति तृतीयपंचमेस्थानेप्रसिद्धेलाभएका-

दशम् अस्तमयंसप्तमं एतेषु सौम्याः शुभग्रहाः प्रष्ठुर्लाभ-प्रदाः एष्वेवत्रिपंचलाभास्तमयेषु पापाअशुभग्रहाः नेष्ट-फला अनिष्टमशोभनंफलंकुर्वंति अर्थनाशं समारभंती-त्यर्थः तुलेति तुलाकन्यामिथुनाःप्रसिद्धाः घटःकुंभः एतेनरराशयःपुंराशयः एतेषुलग्नेषुसौम्यग्रहाधिष्ठितेषुशु भंभद्रंमुनयोवदंति कथयंतीत्यर्थः ॥ २ ॥

स्थानप्रदादशमसप्तमगाश्चसौम्यामानार्थ-दाःस्वसुतलग्नगताभवंति ॥ पापान्यया यसहितानशुभप्रदाःस्युर्लग्नेशशीनशुभदो दशमेशुभश्च ॥ ३ ॥ इंदुद्विसप्तदशमा-यरिपुत्रिसंस्थंपश्येद्गुरुःशुभफलंप्रमदाकृतं स्यात् ॥ लग्नत्रिधर्मसुतनैधनगाश्चपापाः कार्यार्थनाशभयदाःशुभदाःशुभाश्च ॥ ४ ॥

टीका—अन्ययोगांतरमाह स्थानप्रदाइति सौम्याः शुभग्रहाः लग्नाद्दशमेसप्तमेचस्थानेगताःसमवस्थिताःप्रष्टुः

तेषुस्थिताः सौम्याःमानार्थदाःस्युर्भवेयुः पापाव्ययेति पापाअशुभग्रहाः व्ययोद्वादशम् आयएकादशं तयोर्द्वयोः सहिताः नशुभप्रदाःस्युःभवेयुः नशुभफलंप्रयच्छंति लग्नइ-ति पापाइत्यनुवर्तते शशीचंद्रः पापोलग्नेस्थितोनशुभ-इति शुभफलंनददाति दशमेस्थानेसमवस्थितः पापरू-पोपिशुभफलोभवति श्रेयस्करोभवतीत्यर्थः॥ ३॥अन्य-च्चशुभाशुभज्ञानमाह इंदुमिति द्विशब्देनद्वितीयस्थानमु-च्यते सप्तमदशमेप्रसिद्धे आयएकादशं रिपुस्थानंषष्ठं त्रिशब्देनतृतीयस्थानमुच्यते एतेषुद्वितीयतृतीयसप्तमद-शमायारिपुत्रिषुसंस्थितः तमिंदुंचंद्रंगुरुर्जीवःपश्येत्तदा-प्रष्टुःशुभफलंलाभादिकंप्रमदाकृतंस्त्रीहेतुकंस्याद्भवेत् लग्न-त्रिधर्मेति लग्नंपृच्छालग्नं त्रिशब्देनतृतीयस्थानं धर्म-स्थानंनवमं सुतस्थानंपंचमं नैधनमष्टमं एतेषुस्थानेषु-पापाःपापग्रहगताःसमवस्थिताःप्रष्टुःकार्यार्थनाशभयदाः कार्यस्यकृत्यस्यअर्थस्यधनस्यनाशंविघातंभयंभीतिंदद-

तीत्यर्थः शुभदाःशुभाश्चेति एष्वेवलग्नादिषुस्थानेषुशुभाः सौम्यग्रहाःसमवस्थिताःशुभदाःशुभफलप्रदाइत्यर्थः ४ ॥

शुभग्रहाःसौम्यनिरीक्षिताश्चविलग्नसप्ताष्ट-
मपंचमस्थाः ॥ त्रिषड्दशायेचनिशाक-
रःस्याच्छुभंभवेद्रोगनिपीडितानाम् ॥ ५ ॥

इति श्रीवराहमिहिरात्मजपृथुयशोविरचितायां षट्पंचाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥

टीका—अधुनारोगार्तस्यशुभाशुभज्ञानमाह शुभेति शुभग्रहाबुधगुरुशुक्राः विलग्नंपृच्छालग्नं सप्तमाष्टमपंचमस्थानानिप्रसिद्धानि एतेषुयथासंभवंशुभग्रहाःसमवस्थितास्तेचनिरीक्षिताः सौम्यैःशुभग्रहैरेवदृष्टाः एतदुक्तंभवति शुभग्रहदृष्टस्थानस्थाःपरस्परंपश्यंतियदा तदाएषयोगोन-केवलंयावन्निशाकरश्चंद्रमास्त्रिषड्दशायेचस्याद्भवेत् तृतीयषष्ठदशमानिप्रसिद्धानि आयमेकादशमेतेषामन्यतमे चंद्रमाभवतितदारोगनिपीडितानांव्याधिगृहीतानांशुभ-

मारोग्यंवदेद्ब्रूयात् अर्थादेवयोगासंभवेसत्यशुभंवदेदिति
योगेसतिशुभंब्रूयात् ॥ ५ ॥

इति श्रीभट्टोत्पलविरचितायांपट्पं॰शुभा-
शुभाध्यायश्चतुर्थःसमाप्तः ॥ ४ ॥

## अथप्रवासचिंताध्यायः ॥

दूरगतस्यागमनंसुतधनसहजस्थितैर्ग्रहैर्लग्ना-
त् ॥ सौम्यैर्नष्टप्राप्तिलब्ध्वागमनंगुरुसिता-
भ्याम् ॥ १ ॥ जामित्रेत्वथवापष्ठेग्रहःकेंद्रेऽ
थवाक्पतिः ॥ प्रोपितागमनंविद्यात्रिकोणे
ज्ञसितेपिवा ॥ २ ॥

टीका–अधुनाप्रवासचिंताध्यायोव्याख्यायते तत्रा-
दावेवागमनार्थंयोगमाह दूरगतस्येति सुतस्थानंपंचमंधन-
स्थानंद्वितीयम् सहजस्थानंतृतीयम् एतेपुस्थानेपुलग्नात्ता
त्कालिकात् ग्रहैरादित्यादिभिः सर्वैः समवस्थितैः दूर-
गतस्यविप्रकृष्टस्थितस्यआगमनंसंप्राप्तिंवदेत् सौम्यैर्नष्ट
प्राप्तिमिति सौम्यैःसौम्यैर्ग्रहैः बुधगुरुसिताक्षीणचंद्रैः ते

वस्थानेषुव्यवस्थितैः नष्टस्यापहृतस्यवस्तुनःप्राप्तिंलाभं वदेत् तस्यैवप्रवासोनष्टमासीत् सएववाप्रवासिनष्टोऽदर्शनं गतः तद्दर्शनंभवतीत्यर्थः लघ्वागमनंगुरुसिताभ्यामिति गुरुर्बृहस्पतिःसितःशुक्रः आभ्यामेष्वेवस्थानेषुसमवस्थिताभ्यांलघ्वागमनं लघुनाल्पेनैवकालेनप्रवासिनामागमनंप्रवदेत् ॥ १ ॥ अथ योगान्तरमाह जामित्रइति जामित्रं सप्तमंसप्तमस्थानेअथपष्ठेवापृच्छालग्नाधःसमवस्थितः तथा चतुर्णांकेंद्राणांचमध्यादन्यतमेकेंद्रेवाक्पतिर्भवतितदाप्रोपितस्यप्रवासितस्यागमनंप्राप्तिंविद्याज्जानीयात् त्रिकोणइति त्रिकोणेनवपंचमेज्ञोबुधः सितःशुक्रः बुधेशुक्रे वात्रिकोणयोर्नवमपंचमस्थानयोरेवान्यतमस्थेद्वयोर्वात्रिकोणस्थयोः प्रोपितागमनंविद्यादिति ॥ २ ॥

अष्टमस्थेनिशानाथेकंटकैःपापवर्जितैः ॥
प्रवासीसुखमायातिसौम्यैर्लाभसमन्वितः ॥ ३
पृष्ठोदयेपापनिरीक्षितेवापापास्तृतीयेरिपु-

केंद्रगेवा ॥ सौम्यैरदृष्टावधबंधदाःस्युर्नष्टा-
विनष्टामुषिताश्चवाच्याः ॥ ४ ॥

टीका--अथयोगान्तरमाह अष्टमस्थइति निशानाथश्चंद्रमास्तस्मिन्प्रश्नलग्नादष्टमस्थे अष्टमस्थानंसमवस्थितेकंटकानिकेंद्राणि लग्नचतुर्थसप्तमदशमानितैःपापवर्जितैः प्रवासीपथिकः सुखेनाक्लेशेनायातिआगच्छति सौम्यैःशुभग्रहैःकेंद्रस्थैः प्रवासीलाभसमन्वितःलाभयुतः सुखमायाति ॥ ३ ॥ अन्ययोगांतरमाह पृष्ठोदयइति पृष्ठोदयाःमेषकर्कटधन्विमकरमीनाः पृष्ठोदयेपृच्छालग्ने एतेषामन्यतमे तस्मिंश्चपापनिरीक्षिते अशुभग्रहावलोकिते वाशब्दोत्रचार्थे एवंविधेयोगेप्रवासिनोवधस्ताडनंबंधोबंधनंभवेत् अथवापापाअशुभग्रहाः लग्नात्तृतीयस्थानेस्थिताः सर्वएतेचसौम्यैः शुभग्रहैरदृष्टाअनवलोकितास्तदाप्रवासिनोनष्टास्तस्मात्स्थानादन्यदेशंगताः अथवापापालग्नाद्रिपुस्थानेवागतास्तेचसौम्यैरदृष्टास्तदा प्रवासिनोमुषिताश्चोरैर्वाऽपहृताःस्युर्भवेयुः ४, ५

नांविकल्पार्थः वधबन्धदाःस्युरितिपापानांविशेषणम् ४

ग्रहोविलग्नाद्यतमेगृहेतुतेनाहताद्वादशरा-
शयःस्युः ॥ तावद्दिनान्यागमनस्यविद्या-
न्निवर्तनंवक्रगतैर्ग्रहैस्तु ॥ ८ ॥

इति श्रीवराहमिहिरात्मजपृथुयशोविरचि-
तायांषट्पंचाशिकायांप्रवासचिंता-
यांपंचमोऽध्यायः ॥ ५ ॥

टीका—अधुनाप्रवासिनामागमनकालज्ञानमाह ग्रहो-
विलग्नादिति विलग्नात्पृच्छालग्नायतमेयावत्संख्येराशौ
यःकश्चिद्ग्रहःस्थितःसचरपष्टगतिस्तिष्ठेत् तेनतत्प्रमाणे-
नद्वादशराशयःआहतागुणिताःकार्याः एतदुक्तंभवति द्वा-
दशसंख्यमंकमास्थाप्यलग्नात्प्रभृतिग्रहांतरराशिसंख्यया
गुणयेत् तत्रयावत्संख्याभवंति तावत्संख्यानिदिनानि
प्रवासिनःआगमनस्यविद्याज्जानीयात् तावद्भिःदिनैः
पृथिकआगच्छतीत्यर्थः निवर्तनंवक्रगतैरिति अथसग्र-

होवक्रगतिः प्रतीपगतिस्तदा तावत्संख्यैर्दिनैःप्रवासिनः प्रवासान्निवर्तनंभवति ॥ ५ ॥

इति श्रीभट्टोत्पलविरचितायांषट्पंचाशिकाविवृतौप्रवासचिंताध्यायःपंचमः ॥ ५ ॥

## अथनष्टप्राप्त्यध्यायः ॥

स्थिरोदयेस्थिरांशेवावर्गोत्तमगतेऽपिवा ॥
स्थितंतत्रैवतद्द्रव्यंस्वकीयेनैवचोरितम् ॥ १ ॥

टीका—अथनष्टप्राप्त्यध्यायोव्याख्यायते तत्रादावेव चौरज्ञानमाह स्थिरोदयइति स्थिरावृषसिंहवृश्चिककुंभाःएपामन्यतमस्योदयेतत्काललग्नतांप्राप्ते अथवायस्य कस्यचिद्राशेरुदयेतत्कालंस्थिरनवांशकेवर्तमाने अथवायस्यकस्यचिद्राशेर्वर्गोत्तमनवांशकोदये वर्गोत्तमनवांशश्चरादिपुप्रथममध्यमपर्यंतगाः इतिवर्गोत्तमनवांशकानां लक्षणंप्रोक्तम् एवंलग्नस्यवर्गोत्तमगतेनवांशकेवायदपहृतं द्रव्यंनूनंतत्स्वकीयेनात्मीयेनैवकेनचिच्चोरितमपहृतं

तत्रैवतस्मिन्नेवस्थानेस्थितम् अन्यथाअपरेणापहृतं तस्मात्तत्स्थानाचलितमिति ॥ १ ॥

आदिमध्यावसानेषुद्रेष्काणेषुविलग्नतः ॥
द्वारदेशेतथामध्येगृहांतेचवदेद्धनम् ॥ २॥
पूर्णःशशीलग्नगतःशुभोवाशीर्षोदयेसौम्य
निरीक्षितश्च ॥ नष्टस्यलाभंकुरुतेतदाशु
लाभोपयातोवलवाञ्छुभश्च ॥ ३ ॥

टीका—अधुनास्थानज्ञानमाह आदिमध्येति द्रेष्काणाः प्रथमपंचमनवाधिपानामितिद्रेष्काणलक्षणंप्रागुक्तम् आदिद्रेष्काणःप्रथमः मध्येद्वितीयः अवसानेतृतीयः विलग्नं पृच्छालग्नं विलग्नतःविलग्नात्काललग्नादित्थंभूतेषुद्रेष्काणेषु यथासंख्यंहृतंधनंवित्तं द्वारदेशेतथामध्येगृहांते चधनंस्थितंवदेत् एतदुक्तंभवति लग्नस्यप्रथमद्रेष्काणोदयेहृतंधनंद्वारदेशेस्थितंवदेत् द्वितीयेद्रेष्काणोदयेगृहमध्येब्रह्मस्थानसमीपे तृतीयेद्रेष्काणोदयेगृहांतेवेश्मपश्चिमभागेवदेद्ब्रूयादिति ॥ २ ॥ अधुनालाभालाभज्ञा-

नमाह पूर्णःशशीति पूर्णःपरिपूर्णमंडलःशशीचंद्रः सच लग्नगः पृच्छालग्नेसमवस्थितः अथवाशीर्षोदयेलग्नगते तत्रैवशुभःसौम्यग्रहःसमवस्थितः सचसौम्यैःशुभग्रहैरेव निरीक्षितोदृष्टः भवति तदाआशुक्षिप्रमेवनष्टस्यापहृतस्य धनादेर्लाभंप्राप्तिंकुरुतेविधत्ते लाभइति अथवालग्नाल्लाभे चैकादशेस्थानेशुभःसौम्यग्रहः बलवान्वीर्यवानुपयातः प्राप्तोभवति तथापि चशब्दान्नष्टस्याशुलाभंकुरुते अर्थादेवोक्तयोगानामभावेहृतंनलभ्यतइति ॥ ३ ॥

दिग्वाच्याकेंद्रगतेरसंभवेवावदेद्विलग्नर्क्षात् ॥ मध्याच्च्युतैर्विलग्नान्नवांशकैर्योजनावाच्या॥ ४ ॥

इतिश्रीवराहमिहिरात्मजपृथुयशोविरचितायांषट्पंचाशिकायांनष्टप्राप्त्यध्यायःषष्टःसमाप्तः ॥ ६ ॥

टीका–अधुनादिगध्वनोःप्रमाणमाह दिग्वाच्येति प्राच्यादीशारविसितकुजराहुयमेंदुसौम्यवाक्पतयःइतिग्रहाणांदिशउक्ताः तत्रकेंद्रगतैर्ग्रहैर्दिग्दशावाच्यावक्तव्या

त्कालिकलग्नस्ययःकाश्चिद्ग्रहःकेंद्रेसमवस्थितःतस्ययादि-
क् तस्यांहृतंवित्तंगतंवदेत् तद्यथा सूर्येलग्नचतुर्थसप्तमद
शमानामन्यतमस्थानस्थेपूर्वस्यामेव आग्नेय्यांशुक्रे भौमे
दक्षिणस्यां राहौनैर्ऋत्यां सौरौपश्चिमायां बुधेउत्तरस्यां
जीवेईशान्यामिति द्वयोर्बहुपुवाकेंद्रगतेष्वधिकवलादसं-
भवेवावदेद्विलग्नर्क्षात् अजवृषमिथुनकुलीराःपंचमनवमैः
सहेंद्राद्याइतिराशीनांदिशाउक्ताः असत्यविद्यमानेकेंद्रेग्रहे
विलग्नर्क्षात्विलग्नराशितोदिशंवदेद्ब्रूयादिति तद्यथामेषसिं
हधनुःपुलग्नेपुहृतंवित्तंपूर्वस्यांदिशिगतम् एवंवृषकन्यामक
रेपु दक्षिणस्यांमिथुनतुलाकुंभेपु पश्चिमायांवृश्चिककर्कट-
मीनेपूत्तरस्यांमध्याच्च्युतैश्चलितैरिति विलग्नंप्रश्नलग्नंतस्य
नवांशकानवभागास्तैर्मध्यात्पंचमनवमांशकाच्च्युतैश्चलि
तैर्योजनावाच्या एतदुक्तंभवति-प्रश्नलग्नेप्रथमनवांशका-
त्प्रभृतिपंचमनवांशकंयावद्वर्ततेतावद्धृतंवित्तंतस्मिन्नेवदेशे
प्रागुक्तायांदिशिगतंवदेत् पंचमादंशकाद्यावंतः परतो-

शकाःअतीतास्तावंतियोजनानितद्दिवंप्रागुक्तायांदिशि गतमिति ॥ ४ ॥

इतिश्रीभट्टोत्पलविरचितायांषट्पंचाशिकाविवृतौनष्टप्राप्त्यध्यायःषष्ठःसमाप्तः ॥ ६ ॥

## अथ मिश्रकाध्यायः ॥

विषमस्थितेऽर्कपुत्रेसुतस्यजन्मान्यथांऽगनायाश्च ॥ लभ्यावरस्यनारीसमस्थितेतोऽन्यथावामम् ॥ १ ॥

टीका—अथमिश्रकाध्यायोव्याख्यायते तत्रादावेव गर्भिणीपुत्रदुहितृजन्मज्ञानंवरस्यकन्यालाभज्ञानंचाह विषमस्थितेइति अर्कपुत्रेशनैश्चरेप्रश्नलग्नाद्विषमस्थानस्थिते तृतीयपंचमसप्तमनवमैकादशानिविषमस्थानानि एषामन्यतमस्थानस्थेप्रष्टुःसुतस्यजन्मप्रादुर्भावंवदेत् नन्वत्रलग्नस्यकथंविषमस्थानस्यगणनाक्रियते उच्यते अत्राचार्यो वराहमिहिरोज्ञापकः तथाच विहायलग्नंविषमर्क्षसंस्थः सौरोपिपुंजन्मकरोविलग्नात्।अन्यथांगनायास्तु अन्य-

थाअन्यप्रकारेणस्थितेकेपुत्रेलग्नादंगनायाःस्त्रियाःजन्मवदेत् तेनद्वितीयचतुर्थपष्ठाष्टमदशमद्वादशानामन्यतमे स्थानस्थितेसौरे वरस्यनारीकन्यालभ्येतिवदेत्समस्थिते लग्नाद्विषमस्थानस्थेवामंविपरीतं नलभ्यतइत्यर्थः॥ १॥

गुरुरविसौम्यैर्दृष्टस्त्रिसुतमदायारिगःशशी लग्नात् ॥ भवतिचविवाहकर्तात्रिकोणकेंद्रेषुवासौम्याः ॥ २ ॥ चन्द्रार्कयोःसप्तमगौसितार्कीसुखेष्टमेवापितथाविलग्नात् ॥ द्वितीयदुश्चिक्यगतौतथाचवर्षासुवृष्टिंप्रवदेन्नराणाम् ॥ ३ ॥

टीका-अधुनाविवाहज्ञानमाह गुरुरविसौम्यैरिति गुरुर्जीवोरविःसूर्यः सौम्योबुधः एतैर्दृष्टोअवलोकितः कीदृशः त्रिसुतमदायारिगः त्रिशब्देनतृतीयस्थानं सुतस्थानंपंचमंमदस्थानंसप्तममायएकादशमरिस्थानंपष्ठं लग्नादित्येपांस्थानानामन्यतमस्थानेगतः समवस्थितःशशीचन्द्रोगुरुरविसौम्यैर्दृष्टोयदिभवतितदामङ्कः विवाह-

स्यपाणिग्रहणस्यकर्ताविधाताभवति त्रिकोणकेंद्रेष्विति अथवासौम्याः शुभग्रहाः त्रिकोणकेंद्रेषुनवपञ्चमलग्नचतुर्थसप्तमदशमेषुयथासंभवंभवंति तदाप्रष्टुःविवाहो भवतीत्यर्थः वाशब्दोऽन्ययोगव्यवच्छेदकार्थः ॥ २ ॥ अधुनावर्षासमयेवृष्टिज्ञानमाह चन्द्रार्कयोरिति चन्द्रः शशी अर्कःआदित्यः अनयोःसप्तमगौसितार्कीशुक्रशनी यथासंभवंयदिभवतः अथवाविलग्नादेवतेनैवप्रकारेणतावेवसितार्कीद्वितीयस्थानेदुश्चिक्येवाभवतस्तयोर्वास्थानयोस्तदावर्षासुवृष्टिर्वर्षणंवदेत् ॥ ३ ॥

सौम्याजलराशिस्थास्तृतीयधनकेंद्रगाःसितेपक्षे ॥ चन्द्रेवाप्युदयगतेजलराशिस्थे वदेद्वर्षम् ॥ ४ पुंवर्गेलग्नगतेपुंग्रहदृष्टेबलान्वितेपुरुषः ॥ युग्मेस्त्रीग्रहदृष्टेस्त्रीवुधयुक्ते तुगर्भयुता ॥ ५ ॥

टीका—अधुनाप्रष्टुःप्रश्नकालेवृष्टिज्ञानमाह सौम्याइति कर्कमीनमकरकुंभाःजलराशयः सौम्याःशुभग्रहाः

जलराशिपुस्थिताः सितेपक्षेशुक्लेमासार्द्धे पुनरयंविशेषः तृतीयधनकेन्द्रगा यदिभवंति तृतीयद्वितीयलग्नचतुर्थ सप्तमदशमानि एतेपुयथासंभवंगताः वाशब्दोन्ययोगापेक्षायाम् अथवाउदयगतेचंद्रेतत्रजलराशिस्थेपृच्छायां चवर्षासुवृष्टिंप्रवदेत् ॥ ४ ॥ अथगर्भिणीनांकिंजायत-इत्येतज्ज्ञानमाह पुंवर्गेति पुंस्त्रीक्रूराविति राशीनांपुंस्त्री संज्ञाजातकेउक्ताः मेषमिथुनसिंहतुलाधन्विकुंभाःपुंराशयः वर्गलक्षणंप्रागुक्तम् पुंवर्गेपुरुषराशिवर्गे लग्नगतेतात्काललग्नतांप्राप्ते तस्मिन्पुंग्रहदृष्टेनरग्रहावलोकिते क्लीबपतीबुधसौरौचंद्रसितौयोषितांनृणांशेषाइतिग्रहाणांपुंस्त्रीनपुंसकत्वमभिहितं तेनपुंग्रहारविभौमजीवाः एतेषामन्यतमेनलग्नगतेदृष्टेतस्मिंश्चतथाभूतेलग्नेबलान्वितेवीर्ययुक्तेचपुरुषोजायते अधिपयुतोदृष्टोवाबुधजीवनिरीक्षितश्चयोराशिःसभवतिबलवान् यदादृष्टोपिवाशेषैरितिलग्नबलमुक्तंयुग्मेस्त्रीग्रहदृष्टेइति युग्मेयुग्मराशौस्त्रीसंज्ञकेवृषादौगतेस्त्रीग्रहौचंद्रसितौताभ्यामन्यतमेनावलोकितेबलयु-

क्तेचस्त्रीकन्याजायते सामान्यप्रश्नलग्ने बुधयुक्तेबुधेनसंयु-
क्तेस्त्रीगर्भयुतासगर्भावर्तते अथापिनप्रसूयतइत्यर्थः ॥ ५ ॥

कुमारिकांबालशशीबुधश्चवृद्धांशनिःसूर्य-
गुरूप्रसूताम् ॥ स्त्रींकर्कशांभौमसितौविध-
त्तएवंवयःस्यात्पुरुषेषुचैवम् ॥ ६ ॥

टीका—अथप्रष्टुःकीदृशीस्त्रीपुरुषोवाचेतसिवर्ततइत्ये-
तत्परिज्ञानमाह कुमारिकामिति शुक्लप्रतिपत्प्रभृतिदश-
म्यंतंयावच्छशीबालः एकादशीप्रभृति कृष्णपंचमीया-
वत्तुवाषष्ठचाथमावास्यांतंयावद्वृद्धः तत्रपृच्छालग्नंय-
दिसबालशशीबालचंद्रःपश्यतिलग्नेवातथाभूतःस्थितःत-
दाप्रष्ठःकुमारिकांवदेत् एवमेवबुधःपश्यति तत्रावस्थि-
तस्तथापिकुमारिकामर्थादेवयौवनस्थेचंद्रेयौवनोपेतांवृ-
द्धेवृद्धामिति केचिद्बालांकुमारींचशशीबुधश्चेतिपठं-
ति शशीबालांकरोति आपुष्पंयावत् पुष्पदर्शनंयाव-
दित्यर्थः बालांस्त्रियं बुधः कुमारिकामनूढांकरोतिएवं
शनिःसौरोविगतयौवनांजराभिभूतांकरोतिसूर्योऽर्क

बृहस्पतिः एतौप्रसूतांप्रसवयुतांस्त्रियंविधत्तःकुरुतः भौमों ऽगारकः सितःशुक्रः एतौकर्कशामतिदारुणांस्त्रियंकुरुतः एवमनेनप्रकारेणवयःशरीरावस्थास्याद्भवेत् पुरुषेपुचैवमितिपुरुषेष्वपिपृच्छासमयेप्रष्टुःवयोज्ञानमेवमनेनप्रकारेणवदेत् ॥ ६ ॥

आत्मसमंलग्नगतैर्भ्राताासहजस्थितैःसुतःसुतगैः ॥ मातावाभगिनीवाचतुर्थगैःशत्रुगैः शत्रुः ॥ ७ ॥ भार्यासप्तमसंस्थैर्नवमेधर्माश्रितोगुरुर्दशमे ॥ स्वांशपतिमित्रशत्रुषु तथैववाच्यंबलयुतेषु ॥ ८ ॥

टीका–अथपृच्छांपृच्छति कस्यसंबंधिनीचिंतामेमनसिवर्ततेइत्येतत्परिज्ञानमाहश्लोकद्वयेन आत्मसममितिग्रहैरादित्यादिभिःसबलैर्लग्नगतैर्लग्नस्थैः प्रष्टुः आत्मसमंस्वशरीरतुल्यःकश्चिन्मनसिवर्ततइति तत्कार्यंवक्तव्यमित्येवंलग्नात्सहजस्थितैस्तृतीयगैःभ्राता सुतगैःपंचमस्थानस्थैः सुतःपुत्रः चतुर्थगैश्चतुर्थस्थानस्थैर्माताजननीभगिनीचे-

तिवाच्यम् शत्रुगैःषष्ठस्थानस्थैःरिपुचिंता ॥७॥ भार्येति लग्नात्सप्तमस्थानाश्रितैःसबलैर्ग्रहैःपत्नीवाच्या नवमेनवमस्थानस्थैर्धर्माश्रितोधर्मयुक्तइतिचिंतावाच्या दशमेगुरुराचार्यइति स्वांशपतिरित्यादि स्वश्चासावंशश्चस्वांश आत्मीयोनवभागस्तस्यपतिःस्वामीपृच्छालग्नेतत्कालंयोनवांशकउदितः तत्पतिर्यदालग्नस्थोभवति तदाप्रष्टुः आत्मचिंतेतिवाच्यम् अथस्वांशपतिमित्रंतत्काललग्नेस्थितं तदामित्रंचिंतितमितिवाच्यम् अथस्वांशपतिशत्रुःरिपुस्तत्काललग्नेस्थितस्तदाशत्रुचिंतागतेतिवाच्यम् अथनिर्दिष्टस्थानेषुद्वौग्रहौबहवोवाभवंति तदातेषांमध्यायो बलयुतःसयत्रस्थितःतंप्रष्टुःचित्तेगतंस्थितमितिवाच्यम् तथैवतेनैवप्रकारेणयथाभिहितेषु बलयुक्तेषु वीर्यवत्सुमध्यात्कार्यंवाच्यम् शत्रूमंदसितौसमश्चशशिजोमित्राणिशेषारवेरित्यादिनाग्रंथेचजातकेमित्रशत्रुविभागःप्रदर्शितइति ॥ ८ ॥

चरलग्नेचरभागेमध्याद्भ्रष्टेप्रवासचिंतास्यात् ॥ भ्रष्टःसप्तमभवनात्पुनर्निवृत्तोयदिनव

क्री ॥ ९ ॥ अस्तेरविसितवक्रैःपरजायां स्वांगुरौबुधेवेश्याम् ॥ चंद्रेचवयःशशिव त्प्रवदेत्सौरेऽत्यजातीनाम् ॥ १० ॥

टीका—अधुनाप्रवासचिंताज्ञानमाह चरलग्नेइति चराणांमेषकर्कटतुलामकराणामन्यतमेलग्नेतत्रतत्का-लम् चरभागे चरनवांशकेउदितस्तस्मिंश्चरलग्नेमध्यात्पं चमनवांशकात्भ्रष्टेच्युते षष्ठादिकमंशंतत्रवर्ततइत्यर्थ प्रष्टुःप्रवासचिंतास्याद्भवेत् प्रवासनिमित्तंचिताभवेदित्य-र्थः अत्रैवनिश्चयमाह भ्रष्टइति सप्तमभवनंपृच्छालग्नात्स-प्तमोराशिस्तस्मात् तत्कालंयदिकश्चिद्ग्रहोभ्रष्टःप्रच्युतः चलितःसचभौमादिकस्तदाप्रवासीपुनर्निवृत्तोनिवर्ततइ-त्यर्थः प्रवासचिंतातेनकिंतुनयास्यति यदिनवक्रीति यो-सौसप्तमभवनाद्भ्रष्टग्रहः सयदिवक्रीप्रतीपगतिर्नभवति त-दानिवृत्तएववाच्यः अथवक्रीतदावृत्तोयास्यतीतिवाच्य-म् ॥ ९ ॥ अथकीदृश्यास्त्रियासहमेसंयोगआसीदित्येतज्ज्ञा-नमाह अस्तेरविसितवक्रैरिति रविरादित्यःसितःशुक्रःव-

क्रोंगारकः एतेषामन्यतमेपृच्छालग्नादस्तेसप्तमेस्थानेष-रजायांपरपत्नीं परभार्ययासहसंयोगआसीत् एवंगुरौजी-वेस्थितेस्वामात्मीयांस्त्रियमितिप्रवदेत् बुधेवेश्यांसाधार-णस्त्रियंचंद्रेचैवंसाधारणस्त्रियमेववदेत् तथातेनैवप्रकारेण-सौरेशनैश्चरेसप्तमेंत्यजातीनांनिकृष्टजातीनांस्त्रियमगम्या-मितिप्रवदेत् वयःशशिवदिति तासांसर्वासांस्त्रीणांशशि-वचंद्रवद्वयःशरीरावस्थांप्रवदेदिति बालचंद्रेबालांयौवनो-पेतांवृद्धेवृद्धांचंद्रप्रविभागःप्रागेवदर्शितइति ॥ १० ॥

मंदःपापसमेतोलग्नान्नवमेशुभैरयुतदृष्टः ॥
रोगार्तःपरदेशेचाष्टमगोमृत्युकरएव॥११॥
सौम्ययुतोऽर्कःसौम्यैःसंदृष्टश्चाष्टमर्क्षसंस्थ-
श्च ॥ तस्मादेशादन्यंगतःसवाच्यःपिता
तस्य ॥ १२ ॥

टीका—अथरोगार्तस्यपरदेशस्थितिज्ञानमाह मं-दइति मंदःसौरःसचपापसमेतोरविभौमक्षीणचंद्राणा-मन्यतमेनयुक्तस्तथाभूतो लग्नात्पृच्छालग्नान्नवमे स्थाने

स्थितस्तत्रचशुभैरयुतदृष्टः तत्रचशुभग्रहाणामन्यतमेनयु क्तोनाप्यवलोकितस्तदारोगार्तःरोगोज्वरादिस्तेनार्तःपी- डितः परदेशेऽन्यस्मिन्ग्रामादौस्थितःतथाऽनेनैवलक्षणे नयुक्तःसोरोलग्नादष्टमेस्थानेगतःसमवस्थितस्तदातस्यै- वरोगार्तस्यमरणंकरोति ॥ ११ ॥ अथकश्चित्पृच्छति मदीयःपितान्यदेशस्थस्तत्रकिमयापितिष्ठति अथवाऽ न्यदेशंगतइतिएतज्ज्ञानमाह सौम्येति अर्कःसूर्यः सौम्यैः शुभग्रहैर्युतःसहितस्तेषामन्यतमेनचदृष्टोवलोकितोभवति तथाभूतोलग्नाचाष्टमर्क्षसंस्थितस्तत्संस्थोष्टमस्थानमुपग तोभवति तस्माद्देशाद्ग्रामादिकादन्यंदेशांतरंगतः तस्य प्रष्टुः पिताजनकः प्राप्तइतिवाच्यः अन्यथातत्रैव स्थितः ॥ १२ ॥

अंशकाज्ज्ञायतेद्रव्यंद्रेष्काणैस्तस्कराःस्मृ ताः ॥ राशिभ्यःकालदिग्देशावयोज्ञातिश्च लग्नपात् ॥ १३ ॥

इति श्रीवराहमिहिरात्मजपृथुयशो- विरचितापट्पंचाशिका समाप्ता ॥

टीका— अधुनाहृतस्यार्थस्यस्वरूपंतस्करकालदिदेशानांज्ञानंतस्करस्यवयोरूपज्ञानंचाह अंशकादिति अंशकाद्धग्नस्यतात्कालिकस्यनवमभागाद्द्रव्यमपहृतंधातुमूलजीवाख्यंतज्ज्ञायते एतत्पूर्वमेवव्याख्यातम् स्वांशेविलग्नेयदिवात्रिकोणइति तस्यचराशितुल्योवर्णोवक्तव्यः तथाचलघुजातकेप्रोक्तम् अरुणसितहरितपाटलपांडुविचित्रासितेतरपिशंगाः पिंगलकर्बुरबभ्रुकमलिनारुचयोयथासंख्यमिति तस्यचदीर्घमध्यह्रस्वत्वंनवांशकवशाज्ज्ञेयम् तेनचकुंभमीनमेषवृषाह्रस्वाः मिथुनकर्कटधन्विमकरामध्याः सिंहवृश्चिककन्यातुलादीर्घास्तथाचास्मदीयेप्रश्नज्ञाने मेषवृषकुंभमीनाह्रस्वायुगकर्किचापधरमकराः मध्याहरियुवतितुलादयः स्मृतादीर्घाइतिह्रस्वंपरिवर्तुलंमध्यमायतंदीर्घम् अंशकपतौसबलेतःआसारमल्पबलेसुखीनीचस्थितेस्तमितेवापिनष्टप्रायमेव एवमंशकाद्द्रव्यंज्ञायते द्रेष्काणेर्लग्नत्रिभागैस्तस्कराश्चोराः स्मृताउक्ताः यादृशीद्रेष्काणस्याकृतिस्तादृशीएवतस्क-

रस्यवक्तव्या तद्यथा मेषप्रथमेद्रेष्काणेपुरुषःपरशुहस्तः कृष्णोरक्तनेत्रःरौद्रः द्वितीये द्रेष्काणेस्त्रीलोहितांबरास्थूलोदरीदीर्घमुखैकपादा तृतीयेद्रेष्काणेपुमान् क्रूरःकपिलोरक्ताम्बरःदंडहस्तः वृषस्यप्रथमद्रेष्काणेस्त्रीकुंचितलूनकेशास्थूलोदरीदीर्घपादा द्वितीयेनरःकलावित्लांगलशस्त्रकर्मणिकुशलः तृतीयेनरोबृहत्कायः मिथुनस्य प्रथमद्रेष्काणेस्त्रीरूपान्विताहीनप्रजा द्वितीयेपुरुषः उद्यानसंस्थितः अपत्यरहितःकवचीधनुष्मान् तृतीयेपुमान् रत्नभूषितःपंडितोधनुष्मान् कर्कटप्रथमेपुरुषः हस्तिसदृशशरीरः सूकरमुखः द्वितीयेस्त्रीयौवनापेताकर्कशाअरण्यस्था तृतीयेपुरुषः सर्पवेष्टितः नौस्थःसुवर्णाभरणान्वितःसिंहप्रथमेशाल्मलीसंस्थोगृध्रजन्तुशुकाननः द्वितीयेपुरुषोधनुष्मान् नताग्रनासः तृतीयेनरःकूर्चीकुंचितकेशः दंडहस्तः कन्याप्रथमे स्त्रीपुष्पयुता पूर्णनघटेनोपलक्षिता दग्धांबरा गुरुकुलंवांछति द्वितीयेपुरुषोगृहीतलेखनिः श्यामोविस्तीर्णकार्मुकः तृतीयेस्त्रीगौराकुंभकुचा घटहस्ता

देवालयेप्रवृत्ता तुलाप्रथमेपुरुषःतुलाहस्तः वीथ्यापणगतः
उन्नतहस्तःभांडंचिंतयति द्वितीयेपुरुषः कलशधरोगृध्र-
मुखोक्षुधितस्तृषितश्च तृतीयेपुरुषःदीर्घमुखोधनुष्पाणिः
वृश्चिकप्रथमेस्त्रीनग्नास्थानच्युतासर्पनिबद्धपादामनोरमा
द्वितीयेभर्तृकृतेभुजंगावृतशरीरस्थानसुखान्यमभिवांछ-
ति तृतीयेपुरुषश्चिपिटवक्त्रःधनुःप्रथमेपुरुषोधनुष्मान् द्वि-
तीयेस्त्रीसुरूपागौरवर्णा तृतीयेपुरुषोदंडहस्तःकूर्ची मकर-
प्रथमेपुरुषोरोमशःस्थूलदन्तोबंधभृत्रौद्रवदनोद्वितीयेस्त्री
श्यामाऽलंकारान्विता तृतीयेपुरुषः दीर्घमुखोधनुष्मान्
कुंभप्रथमेपुरुषःगृध्रतुल्यमुखःसकंबलःद्वितीयेस्त्रीरक्ताम्ब-
रा तृतीयेपुरुषःश्यामः मीनप्रथमेद्रेष्काणेपुरुषोनौस्थः
द्वितीयेस्त्रीगौरानौस्था तृतीयेद्रेष्काणेपुरुषःनग्नःमांससर्प-
वेष्टितांगःएतद्बृहज्जातकेवराहमिहिरेणप्रोक्तम् एवंद्रेष्काणे
तस्कराउक्ताइति राशिभ्यउक्ताइति राशिभ्यःकालदि-
ग्देशाः इति राशीनांकालविभागः मेषाद्याश्चत्वारःसध-
न्विमकराःक्षपाबलाज्ञेयाइति जातकेउक्तम् तेनमेषवृष-

मिथुनकर्कटधन्विमकराणामन्यतमेलग्नेसंस्थेरात्रावपहृतम् सिंहकन्यातुलावृश्चिककुंभमीनानामन्यतमेदिवालग्नेस्थितेदिवागतमिति एवंकालदिङ्मेषसिंहधनुषिपूर्वस्यां गतम् वृषकन्यामकरेर्देक्षिणस्यां मिथुनतुलाकुंभैःपश्चिमायां कर्कटवृश्चिकमीनैरुत्तरस्यांदिशिगतमिति अथमेषलग्नेपृच्छाकालेस्थितेमेषेचरेभूमौवृषेतुलादौमिथुनेगीतनृत्यस्थानेसंग्रामभूमौवा कर्कटेजलसमीपे सिंहेअरण्यभूमौ कन्यायांनौसमीपेतुलायामापणगृहेवृश्चिकेबिलेश्वभ्रे धनुषिसंग्रामेचप्राकारभूमौमकरेजलसमीपे कुंभेशिल्पगृहे भांडोपस्करसमीपे मीनेजलसमीपइति खचराश्वसर्वेइति-बृहज्जातकेप्रोक्तम् वयोजातिश्चलग्नपादिति लग्नपाव् लग्नेशाव् चोरस्यवयःप्रमाणंजातिंचवदेत् तथाचसंहितायाम् वयांसितेषांस्तनपानबाल्यव्रतस्थितायौवनमध्यवृद्धाः अतीववृद्धारविचंद्रभौमज्ञशुक्रवाग्मीनशनैश्वराणा मिति एवंचंद्रेलग्नपतौ[illegible] मेतुचतुर्थवर्षाधिकः बुधे ब्रह्मचारीदाद[illegible]

ध्यवयःखपंचाब्दःसूर्येसप्तत्यब्दःवृद्धःसौरेतीववृद्धःअशी-
त्यब्दः जातिः ब्राह्मणादिः जीवसितौविप्राणांक्षत्रस्यारो
ष्णगूविशांचंद्रः शूद्राधिपःशशिसुतःशनैश्वरःसंकरभवा-
नामिति ॥ १२ ॥

इति श्रीभट्टोत्पलविरचितायांपट्पंचाशिकावि-
वृतौमिश्रकाध्यायःसमाप्तः ॥ ७ ॥

---

पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
" श्रीवेंकटेश्वर " छापाखाना–मुंबई.

# जाहिरात.

# जाहिरात.

| नाम. | रु० आ० |
|---|---|
| तिषकी लावणी ... ... | ०--१ |
| नवसन्तराज भाषाटीकासहित इसमें नाप्रकारके शकुन वर्णित हैं ऐसा पूर्ण कुनका ग्रन्थ और नहीं छपा है ... | ३--० |
| पोतभाषाटीका ... ... | ०--५ |
| ंद्रिका मूल ४ आने और भाषाटीका | ०--१० |
| ंदसारिणी उदाहरणसहित ... ... | ०--८ |
| कुतूहलभाषाटीका (फलादेशउत्तमोत्तमहै) | १--० |
| ायोनिधि ... ... ... | ०--२ |
| ोध ( ज्योतिष ) ... ... | ०--१२ |
| ांतदैवज्ञविनोद ज्योतिष भाषा--जिसमें गोल और खगोल विद्या सूर्यसिद्धांतका ाहरण और पंचांग बनानेकी पद्धति आ- महर्घ्य समर्घ्य चमत्कारी योगों सहित और धर्मशास्त्रसहित ... ... | २--० |